विधातुं शक्यत्वात् सा च यद्यपि 'जलं कुम्भं वहति 'हस्तिनं स्थलमरोहती' तिप्रयोगापत्त्याऽन्तरितानन्तरितयोः यौगपद्येनासाधुः तथापि अन्यतरस्य कारकान्तरत्वेन विवक्षिते 'कुम्भेन जलं वहति 'हस्तिना स्थलमारोहतीति' साधुरेव अत एव अण्यन्तावस्थायां स्थलस्य कर्मतया न प्रयोगः। एवं च अण्यन्तावस्थायां हस्तिनः कर्मत्वेन स्थलस्य कर्मत्वविवक्षायाः कर्तुमशक्यत्वेपि ण्यन्ते हस्तिनः प्रयोजकत्वेन कर्तृतया स्थलस्य कर्मत्वेनान्वये बाधकाभावादिति। एवञ्च कर्मान्तरनिवर्तकत्वफलं भाष्योक्तम् 'आरोहयमाणोहस्ती स्थलमारोहयति मनुष्यान्' इति। तत्रहि स्थलमधिकं कर्म स्थलं हि हस्तिपृष्ठास्तरणम् तस्य मूलभूताण्यन्तावस्था मनुष्याहस्तिनमारोहन्तीत्येव। आरोहन्ति हस्तिनं हस्तिपका इत्येषात्वारोहयमाण इत्यस्यैव मूलभूता। आरोहयमाण इति सूत्रोदाहरणप्रदर्शनं दृष्टान्तार्थम्। यथा तत्रात्मनेपदं तथात्रापि स्यादिति तदाशयः। किंचास्योदाहरणस्य न मनुष्याः स्थलमारोहन्तीति मूलकत्वा नापि तत्स्थलमारोहतीतिस्थलङ्कर्तृ आरोहयमाणो हस्तीति शानजन्तप्रयोगेण मनुष्यकर्मकारोहणे स्वरसत एव हस्तिन एव कर्तृत्वप्रतीतेरिति कर्मपदस्य वाक्यद्वयेऽपि कर्मकारकपरत्वमेवयुक्तमिति वदन्ति।

युक्तं चैतद्भाष्यानुरोधेन प्रतीयते। तथाहि—

ननु अण्यन्तकर्मकर्तृकण्यन्तोत्तरवृत्तिलस्यात्मनेपदं स्यादनाध्यान इति स्वरसतः सूत्रार्थः प्रतीयते। एवं च आरोहन्ति हस्तिनं हस्तिपकाः आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्रात्मनेपदप्रसङ्गः अत्र आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र अण्यन्तकर्म-हस्तिनः णौ कर्तृत्वसत्त्वात् अतः-'णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः' इति वार्तिकं, वार्तिककृता कृतं तच्च णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यदाण्यन्ते तदेव कर्म भवति तदा आत्मनेपदं भवतीति वक्तव्यमित्यर्थकतया भाष्यकृता व्याख्यातम्। एवं च अण्यन्तकर्मातिरिक्तकर्मणः स्थलस्य ण्यन्ते सत्त्वेन नात्मनेपदम् तच्च वार्तिकं तर्हि वक्तव्यं न वक्तव्यम्। एवं वक्ष्यामि 'णेः' आत्मनेपदं भवति। ततः 'अणौ यत्कर्म णौ,चेत्' अण्यन्ते यत्कर्म णौ चेत् (णौ

यदि ) तदेव कर्म भवति । ततः 'स कर्त्ता' कर्ता चेत्स भवति णाविति' इति भाष्ये प्रत्याख्यातम् ।

अत्र वार्तिकेऽप्रयुक्तमेवकारं प्रयुञ्जानस्य भाष्यकृतोऽयमाशयः यदनेन वार्तिकेन न अण्यन्तकर्मणोण्यन्ते कर्मत्वं प्रतिपादनीयम् अण्यन्तकर्मणोण्यन्तेकर्तृत्वप्रतिपादनात् नह्यस्ति सम्भवो यदेकक्रियानिरूपिते एकस्य कर्तृत्वकर्मत्वे स्यातामिति 'आकडारादेकासंज्ञा' इति शास्त्रबलेन तयाविरोधप्रतिपादनात् किन्तु अण्यन्तकर्मातिरिक्तकर्मनिवृत्तिरेव प्रतिपादनीया इति वार्तिके एवकारं विना तन्न सम्भवतीति भाष्यकृता एव शब्दमध्याहृत्य व्याख्यातम् ।

प्रत्याख्यानस्य त्वयमाशयः यद्येकवाक्यतया अन्वयः सूत्रकृतः संमतो भवेत्तर्हि णेरणौ यत्कर्म णौ चेत्कर्ता इत्येव ब्रूयात् इति यत्सग्रहणेन सूत्रकृतो वाक्यभेदे एव सम्मतिसूचनेन वाक्यभेदमङ्गीकृत्य वार्तिकं प्रत्याख्येयमिति ।

कर्मपदस्य क्रियापरत्वेन व्याख्याने कौस्तुभकृन्मते दर्शयते भृत्यान्राजेति णेरणाविति सिद्धान्तोदाहरणविरोधः तत्र अण्यन्तक्रियापेक्षया णिचि सति प्रेरणांशस्याधिक्यात् ।

न चाध्यारोपितप्रेषणपक्षीयतृतीयकक्षारूपमङ्गीकृत्य तत्र प्रेषणांशाभावेन समानक्रियत्वोपपत्तिरिति वाच्यम् , तस्यां भृत्यानित्यस्यानन्वये तत्पक्षीय द्वितीयकक्ष्यारूपस्यैवाङ्गीकारात् ।

न च तृतीयकक्ष्यायां णिजर्थप्रेषणत्यागेऽपि णिच्प्रयोगवत् द्वितीयकक्ष्यायमन्वितस्य भृत्यस्य प्रेषणांशत्यागेऽपि अन्वयसंभव इति वाच्यम्, मदुक्तरीत्यैवान्वयसम्भवेन क्लिष्टकल्पनाया अनौचित्यात् किं च हृक्रोरन्यतरस्यानित्यत्र 'अभिवादिदृशोरात्मनेपदेवेति वाच्यम्' इति वार्तिकेन दर्शयते भृत्यान् राजेत्यत्र अण्यन्तकर्तृभृत्यानां वैकल्पिकी णेरणाविति आत्मनेपदसंज्ञानिमित्तिका कर्मसंज्ञा न स्यात् , द्वितीयकक्ष्यायां विद्यमानं कर्म तृतीयकक्ष्यायां प्रयुज्यते इत्युपपादनस्य तत्रासंभवात् । तदुक्तं भाष्ये–'हृकोर्वा वचने अभिवादिदृशोरुपसंख्यानम्' अभिवदति गुरुं देवदत्तः अभिवादयते गुरुर्देवदत्तेन देवदत्तं वा, पश्यन्ति भृत्या राजानं दर्शयते राजा भृत्यैर्भृत्यान् वा, कथं चात्रात्मनेपदमेकत्र णेर-

णाविति अपरत्र णिचश्चेति'। किं च कर्मपदस्यात्र क्रियापरत्वे 'अणौ यत्कर्म णौ चेत् तदेव कर्म भवति ततः 'स कर्ता' कर्ता चेत्सणाविति भाष्ये तत्पदेन अण्यन्तक्रियापरामर्शापत्त्या तस्य कर्तृत्वविध्यापत्तिः। किं च कर्ता चेत्स णाविति भाष्येण प्रतीताया णावित्येतन्मात्रानुवृत्तेर्विरोधश्च त्वन्मते संपूर्णस्य पूर्ववाक्यस्य परामर्शात् आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र आरोहन्ति स्थलं मनुष्या इति अण्यन्तकर्त्रयेतिस्वीकारेण अण्यन्तकर्मकर्तृकत्वस्यैवाभावेन सूत्रातिप्रसङ्गाभावेन तद्वारणाय समानक्रियत्वमिति व्याख्याने फलाभावात्।

एवं च कर्मपदस्य क्रियापरत्वे अष्टौ दोषाः। तथाहि—

आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र आरोहयन्ति स्थलं मनुष्या इति अण्यन्तावस्थेतिभ्रमेण अण्यन्तकर्मकर्तृकत्वाभावोऽत्रेति कथनं प्रथमः आरोहन्ति हस्तिनं मनुष्या इत्यण्यन्तावस्थाया एव सिद्धान्तभूतत्वात्।

तथा अणौ यत्कर्म णौ चेदिति वाक्ये कर्मपदस्य क्रियापरत्वेन व्याख्यानं द्वितीयः।

तथा स कर्तेति वाक्ये भाष्यालभ्यस्य संपूर्णपूर्ववाक्यन्वयस्य स्वीकारस्तृतीयः, भाष्ये णावित्यनुवृत्तेरेवोक्ततया तस्य गौरवदूषितत्वात्।

अणावकर्मकादिति विभाषोपपदेनेति च प्राप्ते परत्वात्पूर्वविप्रतिषेधेनेदमेवेष्यते इति पूर्वं विप्रतिषेधाश्रयणं चतुर्थः, तस्य भाष्यानुक्तत्वात्।

न च दर्शयते भृत्यान्राजेति भाष्योदाहरणेन पूर्वविप्रतिषेधोऽनुमीयते इति वाच्यम्, भाष्योदाहरणस्य मदुक्तरीत्या अध्यारोपितप्रेषणपक्षद्वितीयकक्ष्यात्वेन अणावकर्मकत्वाभावेन पूर्वविप्रतिषेधाश्रयणस्यानुपयुक्तत्वात्। एवं च निवृत्तप्रेषणपक्षे दर्शयते भवः आरोयते हस्तीतिचतुर्थकक्ष्योदाहरणमित्यप्यपास्तम्, तत्र अणावकर्मकादिति परस्मैपदावश्यंभावात्।

न च कर्त्रभिप्रायत्वाविवक्षायाम् अणावकर्मकादिति न प्रवर्त्तते इति वाच्यम्, तत्र कर्त्रभिप्राय इत्यस्यानुवृत्त्या तादृशविशेषाश्रयणे प्रमाणाभावात्।

एवं दर्शयति भवः, आरोहयति हस्तीति' अध्यारोपितप्रेषणपक्षद्वि-

तीयकक्षायां भाष्यरीत्या आत्मनेपदस्यौचित्येऽपि परस्मैपदप्रयोगः पञ्चमः दर्शयते भृत्यान्राजेत्यत्रैव आत्मनेपदस्यावश्यं प्राप्तत्वात् । न च यथाश्रुतभाष्यरीत्या अण्यन्तकर्मातिरिक्तकर्मरहिते एव णेरणावित्येतत्प्रवृत्तेरुक्ततया कथमत्र तत्प्राप्तिरिति वाच्यम्, अण्यन्तकर्मातिरिक्तकर्मरहितप्रकृतिकताया एव सिद्धान्तितयाऽदोषात् अण्यन्तकर्तृभृत्यानां ण्यन्तं प्रत्येव कर्मतया प्रकृतेस्तद्रहितत्वात् ।

एवं दर्शयते राजा भृत्यानित्यत्र भृत्यानित्यस्याविवक्षाकथनं षष्ठः सकर्मकाणामप्येतत्सूत्रविषयत्वात् ।

आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र मनुष्यरूपकर्मणा अतिप्रसङ्गो भाष्याभिमत इत्यभिमत्य कैयटदूषणं सप्तमः स्थलमादाय व्यावृत्तेः सर्वाभिमतत्वात् ।

सिद्धान्तविदां कैयटादीनां यथार्थोक्तिषु प्रमादोक्तित्वकथनमष्टम इति कर्मपदस्य क्रियापरतया व्याख्यानं नोचितम् ।

किञ्च कर्तरि कर्मव्यतीहारे' इत्यत्र 'क्रियाग्रहणं कर्तव्यमिति' वदत इह चावदतो वार्तिककारस्य क्रियापरत्वंनाभिप्रेतम् 'णेरात्मनेपदविधानेऽन्यकर्मणस्तत्रोपलब्धिः' इति वाक्ये कर्मपदस्य क्रियापरत्वासंभवेन तद्वार्तिकार्थवर्णनभाष्येऽपि कर्मपदानां क्रियापरत्वासंभवात् । अत एव तद्व्याख्यानभाष्येऽपि कर्मशब्दप्रयोग एव कृतो न क्रियाशब्दप्रयोग इति ।

यदि 'प्रकारे गुणवचनस्य इति सूत्रे 'कर्मव्यतीहारे सर्वनाम्नः समासवच्च बहुलम्' इत्यत्र कर्मपदस्य क्रियायां प्रयोगस्य, गतिबुद्धिसूत्रे कर्मपदस्य क्रियापरत्वमभिप्रेत्य ह्वाययतिकन्दयतिशब्दायतीनां प्रतिषेधस्य वार्तिककृता कृतत्वेन कर्मपदस्य क्रियापरत्वे क्षतिविरहः । किं च कर्मणा यमभिप्रैतीत्यत्र कर्मपदस्य कर्मकर्त्रुभयपरतायाः सिद्धान्तितत्वेन 'कर्तरि कर्मव्यतीहारे' इत्यत्रापि कर्मपदस्य उभयपरत्वे 'अन्योन्यं लुनीतः' इत्यत्रातिप्रसङ्गापत्तिरतः 'क्रियाग्रहणं कर्तव्यमिति' वार्तिककरणस्यावश्यकत्वादित्युच्यते तदा प्रकृते कर्मपदस्य क्रियापरत्वे पूर्वोक्तान्येवदूषणानीत्यलम् ।

## सूत्रप्रयोजनविचारः १३२

नन्वेवं अण्यन्तकर्तृकर्मातिरिक्तकर्मरहिताण्यन्तकर्मकर्तृकानाध्याना-

र्थकरणयन्तादात्मनेपदमित्यथ एतत्सूत्रोदाहरणानां 'लावयते केदार' इत्यादीनां 'कर्मवत्कर्मणातुल्यक्रिय' इत्यनेन कर्मवद्भावेन सिद्ध्या इदं सूत्रं व्यर्थम्। तथा हि—द्वैधीभवनानुकूलव्यापारार्थकलुनातेः 'लुनाति केदारं देवदत्तः' प्रथमा कक्ष्या ततः 'केदारो लूयते' द्वैधीभवतीत्यर्थः। द्वितीया कक्ष्या ततः 'लावयति केदारं देवदत्तः' तृतीया कक्ष्या ततः 'लावयते केदारः' चतुर्थी कक्ष्या तत्र यथा प्रथमकक्ष्यामादाय तुल्यक्रियत्वेन द्वितीयायां तथा तृतीयामादाय तुल्यक्रियत्वेन चतुर्थ्यां तद्सिद्धिरिति।

न च अध्यारोपितप्रेषणापक्षे आरोहयतौ हस्तिनः कर्मत्वाभावात् कर्मवद्भावो न प्राप्नोतीति वाच्यम्, निवृत्तप्रेषणपक्षमादायैव सिद्धेः। अत एव 'द्वितीया तु प्रक्रिया सत्येतस्मिन्सूत्रे संभवतीति दर्शिता न तु तस्यां कर्मवद्भावः लावयतौ केदारस्य कर्मत्वाभावादिति' कैयटः।

न च दृशेः कर्तृस्थभावकतया रुहेश्च कर्तृस्थक्रियतया न कर्मवद्भावप्राप्तिरिति वाच्यम्, पच्यादिभ्यो वैलक्षण्यस्य दुरूपपादत्वात् अन्यथा विक्लेदनद्विधाभावनयोः कर्तृस्थतया तत्रापि कर्मवद्भावो न स्यात्।

न च तत्र व्यापारयोः कर्तृस्थत्वेऽपि फले कर्मस्थ एवेति वाच्यम्, तर्हि प्रकृतेऽपि फलस्य कर्मस्थत्वानपायात्

न च 'एतादृशण्यन्तादात्मनेपदमेव, न यक्चिणौ' इति नियमार्थमेतदिति वाच्यम्, यक्चिणोःप्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानमिति वार्तिकेनैव ण्यन्ते यक्चिणोर्निषेधसिद्ध्या नियमानुपयोगात्।

ननु यक्चिणोर्निषेधाय हेतुमण्णिजभिन्नण्यन्ते उदपुपुच्छत पुच्छं स्वयमेवेत्यादौ नियमार्थमस्तु—

न च पुच्छशब्दस्य द्रव्यवचनतया क्रियावचनत्वाभावेन अण्यन्तकर्मकर्तृत्वासंभवेन एतत्सूत्राप्रवृत्तिरिति वाच्यम्, अस्मिन्विषये पुच्छशब्दः पुच्छकर्मिकायामुदसनक्रियायां वर्तते तस्मात्स्वार्थे णिङ् ततो यदा भ्राम्यमाणं पुच्छं संस्कारवशाच्चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा उदपुपुच्छतेत्यात्मनेपदमेव यथा स्यादेतदर्थं सूत्रं संपद्यते इति कैयटेनैव समाहितत्वात्।

यत्तु णिङन्ताण्णचीदमुदाहरणमित्याहुस्तन्न यस्तर्हि न हेतुमणिज् उदपुपुच्छत पुच्छं स्वयमेवेति भाष्यासंगतेः।

यदपि णिङन्ताण्णिचीदमुदाहरणमित्यत्र णिच्पदेन बहुलमेतन्निदर्शनमिति स्वार्थणिच् गृह्यते इति न भाष्यासंगतिरिति । तदपि न । एवमपि णिङन्तस्याण्यन्ततया अण्यन्तकर्मकर्तृत्वस्य दुरुपपादत्वात् इति चेन्न—

तत्रापि भारद्वाजीयाः पठन्ति यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूआत्मनेपदाकर्मकाणामुपसंख्यानमित्यनेन सिद्धेः ।

न च नियमेनैव सिद्ध्या वार्तिके णिग्रहणं मास्तु इति वाच्यम्, गणयति गणं गोपालकः गणयति गणः स्वयमेवेत्यत्र णिच्सामान्यस्याण्यप्रयोगाभावात् अण्यकर्मकर्तृकत्वाभावेन सूत्राप्रवृत्त्या यक्चिणोर्निषेधाय वार्तिके णिग्रहणावश्यकत्वेन सूत्रस्य वैयर्थ्यात् ।

न च वार्तिकेन यक्चिणोर्निषेधेऽपि गणयति गणः स्वयमेवेत्यत्रात्मनेपदवारणार्थमेव नियमोऽस्तु इति वाच्यम्, इष्यते एवात्रात्मनेपदमिति भाष्येण गणयते गणः स्वयमेवेति रूपस्यैव साधुत्वेनादोषात् ।

नच णेरणाविति नियमसूत्रादप्राप्तौ निर्णीतायाम् इष्यत इवेति भाष्योक्तिः कथं नासङ्गतेति वाच्यम्, नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादणौ कर्मणोऽसंभवाणेरिति हेतुमण्णिचो ग्रहणमिति प्रत्यासत्त्या अणाविति प्रतिषेधोऽपि तस्यैव न्याय्यः इत्यहेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ गणस्य कर्तृत्वमिति णेरणावित्यस्य प्रवृत्त्याऽऽत्मनेपदस्य सिद्ध्या इष्यते इत्युक्तेः सौष्ठवात्

न चैवमप्याध्यानार्थकात् कर्मवद्भावेन आत्मनेपदं माभूदित्येवमर्थं सूत्रमस्तु इह माभूत स्मरति वनगुल्मं कोकिलः स्मरति वनगुल्मः स्वयमेवेति वाच्यम्, एतदपि नास्ति प्रयोजनम् कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियकाणां च भवन्ति कर्तृस्थभावकश्चायमिति भाष्येणैव समाधानादिति चेन्न—

एवं तर्हि सिद्धे सति यदाध्यान इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः भवत्येवंजातीयकानामात्मनेपदमिति किमेतस्य ज्ञापने प्रयोजनम्, पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजेति आत्मनेपदं सिद्धं भवति।

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

इति हरिणैव समाहितत्वात्। तथा हि–पक्वेषु तण्डुलेषु छिन्नेषु वा काष्ठेषु कर्मणि क्रियाकृतविशेषोपलम्भेन कर्मस्थक्रियतया कर्मवद्भावो, न दृश्यादौ कर्मणि क्रियाकृतविशेषानुलम्भात् क्रियायां कर्मस्थत्वं च कर्मनिष्ठोपलभ्यमानविशेषधर्मजनकत्वं न तु कर्मनिष्ठत्वमिति। अत एव 'अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च' इत्यादौ न कर्मवद्भावः। एवं चारुहते हस्ती इत्यत्रात्मनेपदं प्रयुञ्जानः कैयटोऽपास्तः।

न चैवं कृञो यत्नार्थकतया कर्मस्थक्रियत्वाभावेन क्रियते घटः स्वयमेवेत्यादावात्मनेपदाद्यनुपपत्तिरिति वाच्यम्,

कृञो यत्नार्थकत्वमिति वादिनां तार्किकाणामेतद्दोषसत्त्वेऽपि उत्पत्त्यनुकूलव्यापारार्थकत्वं कृञ इत्यभ्युपगच्छतामस्माकं कर्मस्थक्रियतया दोषाभावात्। एवं च दृश्यादियोगे कर्मवद्भावाप्राप्त्या इदं सूत्रं विध्यर्थमिति स्थितम्।

ननु सूत्रसत्त्वे हन्त्यात्मानं घातयत्यात्मा इत्यत्रात्मनेपदं कुतो नेति चेन्न।

पुरुषस्य अन्तरात्मनः कर्तृतया शरीरात्मनः कर्मतया अण्यन्तकर्मणः कर्तृत्वाभावेनात्मनेपदाप्रसक्तेः एकस्यैव कक्ष्यान्तरे कर्मत्वं कक्ष्यान्तरे कर्तृत्वं चानभिधानान्नेत्याशयात् हननं चेह सुखदुःखानुभव एवेति बोध्यमितिदिक्।

## अचो यत् १३३

ननु हलन्तेभ्यः 'ऋहलोर्ण्यत्' इति ण्यता बाधात् परिशेषादजन्तेभ्य एव यद्भविष्यति इति अज्ग्रहणं व्यर्थम्।

न च अज्ग्रहणं भूतपूर्वाजन्तप्रतिपत्त्यर्थम् तेन 'अतो लोप' इत्यनेन आर्धधातुकसामान्ये बुद्धिस्थे अतो लोपेऽपि भूतपूर्वाजन्तत्वमादाय दित्स्यमित्यादौ यदेव न ण्यत्तथा सति यतोऽनाव इत्यस्याप्रवृत्त्या तित्स्वरितमिति स्वरितापत्तिरिति वाच्यम्, तस्मिन्नितिपरिभाषाबलेन औपश्लेषिकाधिकरणसप्तम्यन्तस्यैव आर्धधातुके इत्यस्य स्वीकारेण आर्धधातुके परत एवाल्लोपविधानाद्दित्स्यमित्यादौ अजन्तत्वाद्यति ततोऽल्लोपेन दोषाभावात् अत एव अल्लोपस्य परनिमित्तकत्वेन स्थानित्वाद्‌ न गणयतीत्यत्र वृद्धिरिति चेन्न—

अदृष्टार्थमज्ग्रहणस्य सत्त्वादित्यलम् नन्वेवं दित्स्यमित्यादौ अजन्त-सन्निपातेन जायमानयतोऽल्लोपनिमित्तत्वं न स्यादिति चेन्न सन्निपात-परिभाषाया अनित्यत्वेन अल्लोपसम्भवात् ।

वस्तुतस्तु पूर्वोक्तरीत्या भाष्यकृताऽज्ग्रहणवैयर्थ्यमुपपाद्य 'इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथास्याद्' इत्युक्तं तेन प्रकृताज्ग्रहणमेवार्ध-धातुकपदस्य विषयसप्तम्यन्तत्वे प्रमाणं मूलं तु आर्धधातुकपदस्य पर-सप्तम्यन्तत्वाभिप्रायेण,

यत्तु दरिद्राधातोरार्धधातुकविषये आकारलोपे भूतपूर्वाजन्तत्वेन यत्सिद्धिरज्ग्रहणफलमिति तन्न दरिद्र्य इत्यस्य ण्यत्त्वेन ण्यद्यतोर्विशे-षाभावादिति दिक् ।

## वृत्रघ्नो वृत्रघ्ण इति रूपद्वयं माधवेनोक्तम् १३४

इदमत्रावधेयम् । लक्षणैकचक्षुष्कैर्लक्षणानुरोधेन यल्लक्ष्यं प्रमातुं शक्यं तदेवेष्टमन्यदनिष्टमित्यवधारयितव्यमिति यावता सूत्रवार्तिकभा-ष्याणामैकमत्यं संभवति तावता ऐकमत्यं संपादनीयं न तु परस्परविरोधे -परस्पराज्ञानकल्पमिति वृत्रघ्न इति प्रयोगे सूत्रकृन्मते वैकल्पिकमेव णत्वं भविष्यति न नित्यं नवा निषेधः—

तथा हि—समानपदत्वाभावाद्रषाभ्यामित्यस्य, वृत्रहन्शब्दस्य यौगि-कत्वेन संज्ञात्वाभावात्पूर्वपदादित्यस्य, अनल्विधाविति स्थानिवत्त्वनिषे-धेन एकाजुत्तरपदत्वाभावात् एकाजुत्तरपदेणः इत्यस्य, च न प्राप्तिः ।

न च समासचतुष्टयेऽप्यनल्विधावित्यस्य न प्राप्तिरिति वाच्यम्, अलः परस्य विधाविति पञ्चमीसमासेन प्राप्तिसत्त्वात् ।

न च शब्दतः पञ्चम्यन्तस्येहोपादानाभावेन अलः परस्य विधाविति पञ्चमीसमासपक्षेऽपि न स्थानिवत्त्वनिषेधप्राप्तिरिति वाच्यम्, स्थानि-वत्त्वनिषेधे शब्दतः पञ्चम्यन्तोपादानस्यानपेक्षितत्वेन परिष्क्रियमाणा-ल्विधित्वस्यात्र सत्त्वेन च निषेधे बाधकाभावात् ।

अत एव हल्ङ्यादिसूत्रे भाष्ये प्रथमहल्ग्रहणाभावे संयोगान्तलो-पेन सुलोपमाशङ्क्य तस्यासिद्धत्वाद्राजेत्यादौ संयोगान्तलोपस्यासिद्ध-त्वान्नलोपो न स्यादित्येव दूषणं दत्तम्, अन्यथा स्थानिवत्त्वेन द्यौरि-त्यादौ औकारस्य स्थानिवत्त्वेन संयोगान्तलोपापत्ति—किमिति नोक्ता-

नयेद्भाष्यकारः। अत एव च शेखरकृता द्योरपेणेत्यत्र एकाजुत्तरपदत्वाय अन्तादिवच्चेति सूत्रावश्यकत्वं प्रदर्शितम्, अन्यथा हल्त्वे अच्त्वे वा पञ्चम्यन्तादिपदप्रयोज्यविषयत्वस्याभावेनानल्विधावित्यस्याप्रवृत्त्या स्थानिवत्त्वेन संयोगसंज्ञायां सावपि पदमितिपक्षे द्यौरित्यत्र औकारस्य लोपापत्तिः द्योरपेणेत्यस्य सिद्ध्या अन्तादिवच्चेत्यस्य व्यर्थत्वापत्तिश्च स्यात्।

नन्वेवमपि मूलार्थे ब्रह्मभ्रूणेति नियमेन उपपदान्तरे क्विपोऽप्रवृत्तावपि वर्तमानार्थे क्विप् चेति क्विपः सम्भवेन प्रकर्षेण हन्तीति प्रहा तस्माच्छसि प्रघ्न इत्यत्र सूत्रकृन्मते हन्तेरत्पूर्वस्येति णत्वं स्यादेव अल्लोपोऽन इत्यत्र हन्तेरत्पूर्वस्येत्यत्र च, इट ईटीत्यत्र विशिष्टस्येट्त्वस्येव विशिष्टस्यैवात्त्वस्याश्रयणेनानल्विधाविति निषेधाप्रवृत्त्या स्थानिवद्भावेनात्पूर्वकत्वसंभवात्।

तदुक्तं शेखरे–शब्दतः स्थानिस्थान्यवयवान्यतरालवृत्तिधर्मवतो विशेष्यतया विशेषणतया वा यत्राश्रयणं तत्र निषेध इति।

अतएव भोभगो सूत्रे अशूग्रहणाभावे देवाः सन्तीत्यत्र स्थानिवद्भावेन रुत्वाद्यत्वं स्यान्नह्ययमल्विधिः रोरिति समुदायरूपाश्रयणादित्युक्तं कौमुद्यामिति चेन्न।

शब्दतः अलाश्रयणे इत्यस्य अल्त्वव्याप्यधर्मघटिधर्माश्रयणे इत्यर्थेन प्रकृते अदित्यस्य तपरसूत्रेण ह्रस्वाकारत्वावच्छिन्ने संकेतिततया अत्त्वस्याल्त्वव्याप्यधर्मत्वेनाल्विधाविति निषेधप्रवृत्तौ बाधकाभावेन सूत्रकृन्मते प्रघ्न इत्यादौ हन्तेरत्पूर्वस्येति णत्वाप्राप्त्याऽदोषात् इट्पदं तु इट्त्वावच्छिन्नोपस्थापकमिति इट्त्वस्याल्त्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या अग्रहीदित्यस्य सिद्धिः। एवं रुत्वादिकमपि बोध्यम्।

न च भाष्ये आद्यन्तौ टकिताविंत्यनेन टित आदौ कितोऽन्त्ये संकेतबोधनेन इः टः यस्येति समासे इट्त्वस्यापि अल्त्वव्याप्यधर्मघटितत्वमिति वाच्यम्, तादृशभाष्यस्यासिद्धान्तभूतत्वेनादोषात्।

न चानुबन्धविनिर्मुक्तस्यैव इडादिपदेनोपस्थितिः अनुबन्धविनिर्मुक्तपदार्थोपस्थितेः शेखरादावुक्तत्वात्। अत एव इदम इश् इत्यत्र इशप-

दस्य अणुबोधकत्वेन सवर्णग्रहणमाशङ्क्याप्रत्यय इति निषेध इत्युक्तं भाष्यादाविति वाच्यम्,

इडादिपदेन इट्त्वेनैव अनुबन्धविनिर्मुक्तेकाराद्युपस्थितेरभ्युपेततया इट्त्वस्य अल्त्वव्याप्यधर्मत्वाभावेनानल्विधावित्यस्याप्रवृत्तेः अत्पदं तु ह्रस्वाकारत्वेनैवोपस्थापकमित्यदोषात्।

नन्वेवमपि पञ्चमीसमासपक्षे अचःपरस्मिन्निति स्थानिवद्भावादेकाजुत्तरपदत्वसत्त्वेन वृत्रघ्न इत्यत्र 'एकाजुत्तरपदे णः' इति णत्वं दुर्वारम्, पूर्वत्रासिद्धे न स्थानिवदिति निषेधस्तु न, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति परिभाषणादिति चेन्न।

तथा सति व्यूढोरस्केन इत्यत्र विसर्गस्य अयोगवाहानामकारोपरिपाठेन अच्त्वादचः परस्मिन्निति स्थानिवत्त्वेन सकारस्याप्यच्त्वेन णत्वापत्तेः।

यदि तत्रायोगवाहपाठस्य अनल्विधाविति स्थानिवत्त्वनिषेधसिद्धिफलकतया वार्तिककाराभिमतत्वेन तत्प्रामाण्यादनित्यत्वेनाचः परस्मिन्नित्यस्याप्रवृत्तिरित्युच्यते तदा कुव्यवाये हादेशेति वार्तिकात्पूर्वग्रहणयोर्लक्ष्यसिद्धौ तुल्यफलतासूचकभाष्यप्रामाण्यादनित्यत्वेनैव अचः परस्मिन्नित्यस्य वृत्रघ्न इत्यादौ वारणसंभवात्।

नचैवमपि 'कुमति च' इति सूत्रेणैव वृत्रघ्न इत्यत्र णत्वापत्तिर्दुर्वारेति वाच्यम्, नकारसंनिपातेन जातकुत्वस्य तन्नाशे निमित्तत्वायोगात्।

नन्वेवं प्रघ्नन्तीत्यत्रापि अट्कुप्वाङित्येतत्साहकारेणैव हन्तेरित्यस्य प्राप्तेर्वक्तव्यतया तत्र च संनिपातपरिभाषाविरोधात् कवर्गव्यवधानस्यानिमित्ततया णत्वप्राप्त्या अत्पूर्वस्येत्यस्यवैयर्थ्यापत्तिरिति चेन्न—

अत्पूर्वस्येति सूत्रसामर्थ्यादट्कुप्वाङ्विषये सन्निपातपरिभाषाऽप्रवृत्तावपि कुमति चेति विषये तदप्रवृत्तौ मानाभावात्।

न चाट्कुप्वाङिति सूत्रेणैव वृत्रघ्न इत्यत्र नित्यं णत्वं स्यादिति वाच्यम्, तस्य नियमार्थत्वेन स्वतन्त्रणत्वविधायकत्वायोगात् एवं च सूत्रकृन्मते वृत्रघ्न इत्यादौ प्रातिपदिकान्तेति वैकल्पिकं णत्वं स्यादेवेति ध्येयम्।

इति सूत्रकृन्मतम्।

## वार्तिकमते वैकल्पिकणत्वोपपादनम्

वार्तिककारमतेऽपि वृत्रघ्न इत्यत्र वैकल्पिकं णत्वं भवत्येव न तु नित्यं णत्वं नतरां वा वैकल्पिकं मित्यवधेयम्। तथाहि—

रषाभ्यामित्यस्य समानपदत्वाभावेन, पूर्वपदादित्यस्य संज्ञात्वाभावेन, अट्कुप्वाङित्यस्य नियमार्थत्वेन स्वतन्त्रविधायकत्वायोगेन, एकाजुत्तरपदत्वाभावेन एकाजुत्तरपदे ण इत्यस्य, संनिपातपरिभाषाविरोधेन कुमतिचेत्यस्य, चाप्राप्त्या नित्यणत्वाप्राप्तिः। एवं च प्रातिपादिकान्तेति वैकल्पिकं णत्वं स्यादेव।

न च 'कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्य' इति वार्तिकेन वैकल्पिकणत्वनिषेधः स्यादिति वाच्यम्, अत्पूर्वस्येत्येतत्समानफलकेन तेन वार्तिकेन हन्तेरित्यस्यैव निषेधस्वीकारात्।

न चैवं 'कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः' किं प्रयोजनं वृत्रघ्नः सुघ्नः प्राघानीति भाष्यविरोधः आद्ययोर्हन्तेरित्यस्याप्राप्तेरिति वाच्यम्, सुघ्न शब्दे समानपदत्वाभावेन रषाभ्यामित्यस्य, गकारव्यवधानेन पूर्वपदादित्यस्य, प्रातिपदिकान्तत्वाभावेन प्रातिपदिकान्तेत्यस्य, चाप्राप्तिः, एवं कप्रत्ययान्तसुघ्नशब्दसाहचर्येण वृत्रघ्नशब्दोऽपि कप्रत्ययान्त एव न तु शसन्तः इति तत्रापि णत्वाप्राप्तिः। एवं च उदाहरणद्वयस्यान्यथासिद्धत्वात्तृतीयोदाहरणस्यैव वार्तिकफलत्वेन भाष्याभिप्रेतत्वमवगम्यते तदेतद्ध्वनयितुमत्पूर्वग्रहणं न कर्तव्यं भवतीत्युक्तं भाष्ये उदाहरणद्वयस्यान्यथासिद्धत्वादेव सूत्रवार्तिकयोर्न फलभेदः, अन्यथा सूत्रकृन्मते सुघ्नः वृत्रघ्न इत्यादौ णत्वेन वार्तिकमते च तदभावेन फलभेदो दुरुद्धरः स्यात्। एवं च भाष्योदाहरणे कप्रत्ययान्तस्यैव सत्त्वेन तत्र णत्वस्यानिष्टत्वेपि हन्तेरित्येतन्मात्रनिषेधकेन अत्पूर्वस्येत्यनेन तत्समानफलकेन वार्तिकेन च प्रातिपदिकान्तेति वैकल्पिकणत्वबाधकत्वायोगात् वार्तिकमतेपि वृत्रघ्नो वृत्रघ्ण इति वैकल्पिकं णत्वं शसि भवत्येवेति बोध्यम्।

## दीक्षितोक्तणत्वाभावखण्डनम्

यत्तु वार्तिकस्य णत्वप्रकरणनिषेधकतेत्यभिमत्य कौमुदीकृता योगविभागः प्रदर्शितः। यच्च वार्तिकार्थं योगविभागेन संगृह्य व्याचष्ट इति-

व्याख्यातृभिरवतारितं तदुभयमप्ययुक्तमेव भाष्ये योगविभागस्यानुपलम्भात् हन्तेरत्पूर्वस्येत्यत्र अत्पूर्वग्रहणं न कर्तव्यं भवतीति भाष्ये हन्तेरत्पूर्वस्येत्युक्त्या एकसूत्रत्वे एव स्वारस्यलाभाच्च । किं च अत्पूर्वस्य इत्यस्य पृथक्योगत्वे प्रकरणनियामकत्वोपपत्तये उपसर्गस्येत्यस्यासंवन्धकल्पने अग्रे च तत्संबन्धकल्पनेऽत्यन्तं गौरवात् । एवं च योगविभागसामर्थ्यादेकाजुत्तरपदेण इति णत्वमपि निवर्त्यत इत्युक्तिरत्यन्तं युक्तिविहीना स्थानिवद्भावप्राप्त्या एकाजुत्तरपदे इत्यस्याप्रवृत्तेश्चेत्यलम् ।

यत्तु अत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम् तेन वहुवृत्रहाणीत्यत्र न दोष इति शेखरकारस्तन्न, वार्तिकस्य हन्तेरित्येतन्मात्रनिषेधकतया योगविभागस्य चासत्त्वेन 'एकाजुत्तरपदे ण' इति णत्वस्य वहुवृत्रहाणीत्यत्र सूपपादत्वात् ।

यत्तु 'एकाजुत्तरपदे ण' इति णत्वमपि निवर्तते इति प्रतीकमादाय अपिना प्रातिपदिकान्तेत्यस्य कुमतिचेत्यस्य च संग्रहः, वाध्यसामान्यचिन्ताश्रयणात्सर्वणत्ववाध इत्युक्तं शेखरकृता । तदपि न योगविभागस्य भाष्यानुक्तत्वेन तत्सामर्थ्येन प्रातिपदिकान्तेति णत्ववाधायोगात् कुमतिचेत्यस्य सन्निपातपरिभाषया अप्रवृत्त्या तद्बाधकथनायोगाच्च योगविभागस्वीकारेऽपि अनन्तरस्येति न्यायवाधेन एकान्तरितस्य एकाजुत्तर इति णत्वस्य वाधे एव मूलस्वारस्येन वाध्यसामान्यचिन्ताश्रयणस्य मूलस्वारस्यविरोधाच्च अन्यथा स्वाधीन एव शब्दप्रयोगे प्रातिपदिकान्तेत्यपि किन्न ब्रूयात् एवञ्च प्रातिपदिकान्तेति णत्ववाधो न मूलकृदभिमत इति सूक्ष्मं विभावनीयं सूरिभिः ।

नन्वेवं मूलकृत्तात्पर्यवर्णने यत्तु वृत्रघ्ना वृत्रघ्ण इति वैकल्पिकं णत्वं माधवेनोक्तमिति ग्रन्थस्य का गतिरिति चेत् किं कुर्म उत्तरग्रन्थानुसरणे शब्दस्वारस्यविरोधादित्यलमसदावेशेन ।

अथैवमपि प्रघनाघन इत्यत्र णत्वं कुतो न अत्पूर्वत्वस्य सत्वात् । शेखरमते तु हस्थानिककवर्गाभावान्न दोष इति चेन्न । घनाघनशब्दस्य रूढतया तद्घटकधात्वर्थान्वयित्वाभावेन उपसर्गसंज्ञाविरहाण्णत्वाप्राप्तेरित्यलम् ।

तस्माद्रूपद्वयं माधवोक्तं सम्यगेवेति प्राचीनानुयायिनः ।

आभीक्ष्ण्ये णमुल् च १३५

ननु स्मारं स्मारं नमति शिवम् स्मृत्वा स्मृत्वा नमति शिवम् इति रूपद्वयं च ग्रहणाभावेऽपि वासरूपन्यायेन णमुला विकल्पेन उत्सर्गस्य समानकर्तृकयोः पूर्वकाल इति क्त्वाप्रत्ययस्य बाधात् सिद्धमिति क्त्वासमुच्चयाय चग्रहणं व्यर्थमिति चेन्न ।

प्रकृते वासरून्यायप्रवृत्तिस्वीकारे लडादीनामपि प्रवृत्त्यापत्त्या चग्रहणेन तदप्रवृत्तिस्वीकारात् ।

न चेष्टापत्तिः । लडादिसमावेशार्थं क्रियमाणस्य 'विभाषाग्रेप्रथमपूर्वेषु क्त्वाणमुलौ' इति सूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् । एवं च विभाषाग्रहणेन णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्नेति ज्ञापनाद् आभीक्ष्ण्ये णमुल् चेत्यत्र लडाद्यप्रवृत्तिः । तत श्चकारेणैव क्त्वाप्रत्ययो लभ्यते । किं च वासरूपन्यायेन क्त्वालडाद्योः स्वीकारे न यद्यनाकांक्षे इति क्त्वाणमुलोरिव लटोऽपि निषेधापत्तिः सिद्धान्ते तु विशेषविहितयोः क्त्वाणमुलोरेव निषेधः न सामान्यविहितस्य लट इति यदयं भुङ्क्ते ततः पठतीति प्रयोगसिद्धिरित्यलम् ।

वैदिकप्रक्रियाया लौकिकप्रक्रियातो भेदहेतुकथनम् १३६

ननु रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति भाष्यात् 'ब्राह्मणेन निष्कारणोधर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतेश्च कृत्स्नस्यैव व्याकरणस्य वैदिकशब्दसाधुत्वार्थं प्रवृत्ततया—

लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ ।
रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा ॥
वर्णैकत्वात्पदैकत्वं क्वाचित्की रूपभिन्नता ।
प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥

इति जैमिनीयन्यायमालोक्तरीत्या वैदिकशब्दानां लौकिकशब्दाभिन्नतया च स्वरवैदिकप्रक्रिययोः लौकिकप्रक्रियातः पृथक्कृतेः क आशय इति चेदुच्यते

लौकिकशब्देभ्यः आत्मना जहार देवाः देवैरित्यादिभ्यो भिन्नानां

त्मना जभार देवासः देवेभिरित्यादीनां वैदिकशब्दानां स्वरेण सन्मात्र-व्युत्पादकवैदिकप्रक्रियायाः पृथक्करणम् । अत एव केषां शब्दानां लौकिकानां वैदिकानां चेति महाभाष्ये लौकिकेभ्यो भिन्नतयैव वैदिकान्व्याहरति भगवान्भाष्यकारः । स्वरस्तु लौकिकप्रयोगे काव्यादौ नाद्रियते इति तत्प्रक्रियाया अपि लौकिकप्रक्रियातः पृथक्करणमिति उपरितनोक्त-न्यायमालास्थपद्याभ्यामपि प्राथिकेण पदैक्येनेत्यनेन लौकिकेभ्यो भिन्ना अपि वैदिकाः शब्दाः सन्तीति सूचितमित्यलम् ।

## तयोर्य्वावचि संहितायाम् ११७

इदुतोर्यकारवकारौ स्तोऽचि संहितायामिति सूत्रार्थः । अग्ना३ याशा पटा३ वाशा अग्ना३ यिन्द्रम् पटा३ वुदकम् इत्युदाहरणानि ।

नन्विदं सूत्रं व्यर्थम् । अग्ना३ याशा इत्यादेरिकोयणचीति यणैव सिद्धेरिति चेन्न—

एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुताविति सूत्रस्य त्रैपादिकत्वेन यणं प्रत्यसिद्धतया अग्ना३ याशा इत्यत्र इकारस्येको यणचीति यणोऽप्राप्तेः ।

न च प्लुतस्यासिद्धत्वेन तस्य स्वरसंध्याख्यविकाराप्राप्त्या प्लुतप्रगृह्या अचि नित्यमिति प्लुतस्य प्रकृतिभावविधानमनर्थकं सत् असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेन प्लुतप्रकरणे यत्कार्यं तत्स्वरसंधिषु सिद्धमिति ज्ञापयति एवं च यणं प्रतीकारस्यासिद्धत्वाभावेन अग्ना३ याशा इत्यत्र यण्सिद्धिरिति वाच्यम्,

एवमपि अग्ना३ यिन्द्रम् पटा३ वुदकमित्यत्र इकोयणचीति बाधित्वा प्रसक्तमकः सवर्णे दीर्घ इति दीर्घं बाधित्वा इदुतोर्यकारवकारयोर्विधानाय तयोर्य्वावचीत्यस्यावश्यकत्वात् । अग्ना३ याशा पटा३ वाशा इत्यत्र इकोऽसवर्णे इति पाक्षिकह्रस्वबाधनार्थमावश्यकत्वाच्च ।

न च भोः शब्दस्य छान्दसः प्लुतस्ततः भो३ इ इन्द्र इत्यत्र इकारस्य निपातत्वेन प्रगृह्यतया यणोऽप्राप्त्या 'प्लुतपूर्वस्य यणादेशो वक्तव्यः भो३ यिन्द्र इत्यर्थमिति' वार्तिकेन अग्ना३ याशा इत्यादौ शाकलह्रस्वत्वस्य सवर्णदीर्घत्वस्य च बाधेनेष्टसिद्धिः । नहि भो३ यिन्द्र इत्यत्र-तयोर्य्वावचीति सिद्धिः इकारस्य प्लुतविकारत्वाभावादिति वाच्यम्,

अग्ना ३ याशा इत्यादौ यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति स्वराप्रवृत्त्यर्थं तयोर्वाचवचीत्यस्यावश्यकत्वात्, अन्यथा वार्तिकविहितयणः सिद्धतया यकारोत्तरवर्त्त्याकारस्य स्वरितत्वापत्तिरिति दिक्।

तदयमत्र संग्रहः।

किन्तु यथा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधौ तु निवर्त्त्यौ ॥१॥
इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥ २ ॥

## अनुदात्तं पदमेकवर्जम्। १३८

परिभाषेयं स्वरविधिविषयेति। नेदं संज्ञासूत्रम् संज्ञाविधायकसूत्राणां प्रायः प्रथमाध्याये पाठदर्शनेनास्यातथात्वात् संज्ञासंज्ञिभावस्याप्रतीतेश्च।

नापि विधिसूत्रम्। तथा सति क एको वर्जनीय इत्यस्याप्रतीत्यापत्तौ विनिगमनाविरहात् तत्तच्छास्त्रविहितोदात्तस्वरितकानां सर्वेषामेव वर्जनापत्तौ आमलकीज इत्यत्र उदात्तचतुष्टयश्रवणापत्तेः, तत्र हि ङीषः प्रत्ययस्वरेण डस्य कृत्स्वरेण उदात्तत्वम् दीर्घकाशतुषभ्राष्ट्रवटं जे' इति पूर्वपदान्तोदात्तत्वम् 'अन्त्यात्पूर्वं बह्वच' इति लकाराकारस्योदात्तत्वम् इति युगपदुदात्तचतुष्टं श्रूयेत अस्य तु मकाराकारोऽवकाशः स्यात्।

नापि नियमसूत्रम् अनुदात्तत्वस्य केनाप्यप्राप्तेः,

नाप्यतिदेशसूत्रं वतिघटितत्वाभावात्,

नाप्यधिकारसूत्रम् अस्वरितत्वात् तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेव निघातप्रवृत्तौ एकवर्जमित्यस्य वैयर्थ्यापत्तेश्च। आद्युदात्तश्च समानोदरे शयित ओ चोदात्त इत्यादीनामसंग्रहापत्तेश्च इति परिशेषात्परिभाषासूत्रमिति स्थितम्।

## सति शिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यः १३९

यो हि यस्मिन्सति शिष्यते स सति शिष्टः तस्य बाधको भवति।

एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम् । तथा हि-कार्यकालपक्षे उदात्तस्वरितविधिभिरेकवाक्यतापन्नया 'अनुदात्तं पदमेकवर्जम्' इति परिभाषया शेषनिघातः क्रियते तत्रोत्सर्गस्य अपवादस्य वा या स्वस्मा प्राप्तिस्तदेकवाक्यतापन्नया अनया पूर्वा प्रवृत्तिर्बाध्यते इति औपगवम्-इत्यत्र अण्प्रत्यये स्वमते च 'आद्युदात्तश्च इति प्रवर्तमानं स्वरस्यैव पूर्वां प्रवृत्तिं बाधते इति द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति ।

ननु अनुदात्तं पदमेकवर्जमिति परिभाषायां कार्यकालपक्षाङ्गीकारे त्रिपाद्यामपि प्रवृत्त्यापत्तौ खलप्व्याशा इत्यत्र उदात्तस्वरितयोर्यण इति यकारोत्तराकारस्य स्वरितत्वेऽनयाशेषनिघातापत्तिः ।

यतोऽनाव इत्यस्य वैयर्थ्यापत्तिश्च, न च काश्या इत्यादौ 'यतोनाव' इत्याद्युदात्ते कृते शेषनिघाते 'उदात्तादनुदात्तस्य स्वरित' इति स्वरिते शेषनिघाते तित्वप्रयुक्तस्वरिताद्विशेषाद्यतोऽनाव इत्यस्य वैयर्थ्यापत्त्या तित्स्वरितमित्यस्य वैयर्थ्यापत्त्या च अनुदात्तं पदमेकवर्जमित्यस्या कार्यकालपक्षेऽपि न त्रिपाद्यां प्रवृत्तिरिति यथोद्देशपक्ष एव प्रकृतपरिभाषायामिति वा ज्ञाप्यते इति दण्ड्युक्तं युक्तमिति वाच्यम्,

सन्निपातपरिभाषया 'उदात्तादनुदात्तस्य स्वरित' इति विषये शेषनिघातप्रवृत्त्या तयोश्चारितार्थ्येन प्रकृतपरिभाषात्रिपाद्यामप्रवृत्तौ यथोद्देशपक्षे वा मानत्वायोगात् 'कर्तव्यं तत्र, कर्तव्यं क्व, कण्ठ्यः क्व, कण्ठ्यस्तत्र, इत्यादौ नोदात्तस्वरितोदयमिति 'उदात्तादनुदात्तस्य स्वरित' इत्यस्य निषेधविषये तव्यतस्तित्त्वस्य यतोऽनाव इत्यस्य च चारितार्थ्याच्चेति चेन्न--

लक्ष्यानुसारेण अनुदात्तं पदमित्यत्र अधिककार्यार्थस्वरितत्वप्रतिज्ञया त्रिपाद्यामप्रवृत्तिकल्पनेन खलप्व्याशा इत्यादावस्या अप्रवृत्तेरदोषात् दण्ड्युक्तं यथोद्देशत्वं त्वस्या न युक्तम् अत्रैव सूत्रे कार्यकालं संज्ञापरिभाषमिति भाष्यविरोधात् ।

अन्यत्र विकरणेभ्य इत्यत्रमानं तु तस्यानुदात्तेदिति तासेः परस्य लसार्वधातुकस्यानुदात्तविधानं तथाहि यद्यपि लावस्थायां तासिर्विधीयते तथापि लसामान्यापेक्षत्वेनान्तरङ्गत्वपरत्वाद्वा लादेशेषु कृतेषु पश्चा-

त्तासिरिति सतिशिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं सदनुदात्तविधानमन्यत्र विकरणेभ्य इत्यत्र मानमित्यलम्।

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति १४०

नन्वत्र प्रत्ययादितिव्यर्थम् भ्यादिभ्यः परस्य पितः प्रत्ययस्यैव सत्त्वादिति चेन्न। प्रत्ययात्पूर्व एव उदात्तो यथा स्यात्संघातो माभूदित्यर्थं प्रत्ययादित्यस्यावश्यकत्वात्।

न चोदात्तत्यादीनामज्धर्मत्वेन, पितीति सप्तम्या निर्दिष्टपरिभाषोपस्थित्या च अलोऽन्त्यपरिभाषया ऽचोन्त्यस्यैव भविष्यतीति वाच्यम्, स्वरविधौ संघातः कार्यीत्यर्थस्यापि ज्ञापनेनालोऽन्त्यपरिभाषायाः स्वरविधावप्रवृत्तेः अत एव कर्षात्वत इति सूत्रेऽन्तग्रहणं चरितार्थमिति दिक्।

नन्वेवमपि प्रत्यये पिति इत्येवोच्यतां पूर्वग्रहणं व्यर्थमिति चेन्न। 'सौर्यः सप्तम्यस्तदन्तसप्तम्य' इति ज्ञापनार्थत्वात् तेन सर्वस्य सुपीत्यस्यसुबन्तस्य सर्वस्येस्यर्थात् सर्वप्रिय इत्यादौ स्वरसिद्धिः ञित्यादिर्नित्यमित्यत्र ञिन्दतस्य निदन्तस्येत्यर्थलाभश्चेत्यलम्।

फिषोऽन्त उदात्तः १४१

नन्वपाणिनीयानां फिट्सूत्राणां पाणिनिव्याकरणे आश्रयणे बीजाभावः न च पाणिनीयान्येवेमानीति वाच्यम्, वृषादीनां च उञ्छादीनां च इत्याभ्यामाकृतिगणाभ्यां क्रमेण आद्युदात्तत्वान्तोदात्तत्वयोः सिद्धौ ग्रामादीनां च घृतादीनांचेत्यनयोर्वैयर्थ्यापत्तेः मम तु भिन्नकर्तृकत्वान्न दोष इति चेन्न—

आद्युदात्तश्चेति सूत्रे 'यत्रानुदात्ता प्रकृतिः समत्वं सिमत्वमिति' 'प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति' इति भाष्याभ्यां अपाणिनीयानामपि फिट्सूत्राणां पाणिनिव्याकरणे आश्रयणसूचनात् त्वत्वसमसिमेत्त्यनुच्चानि फिषोऽऽन्तउदात इति सूत्रयोरनादरणे तदासंगत्यं स्पष्टमेवेत्यलम्।

स्वरविधौ व्यञ्जनमविद्यमानवदित्येदत्र नेष्यते १४२

ननु मरुत्वानित्यत्र स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषया तकारस्याविद्यमानवत्वेन ह्रस्वान्तात्परत्वस्य मतुपि सत्त्वेन ह्रस्वनुड्भ्यां

मतुप् इति स्वराप्राप्तिरत आह स्वरविधौ व्यञ्जनमविद्यमानवदित्येदत्र नेष्यते इति ।

अयं भावः-'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रे पृथिव्यादिपर्युदासो व्यर्थः । उदात्तत्वादेरजधर्मतया पकारस्यैवादौ सत्वेनानुदात्तादित्वाभावादिति तत्सामर्थ्येन स्वरविधाविति परिभाषा कल्प्यते, ततश्च पकारस्याऽविद्यमानवत्त्वेन अनुदात्तादित्वसत्त्वाद्द्वन्द्वे चेति प्राप्तप्रकृतिस्वरस्य निषेधप्राप्तौ पर्युदासः सार्थक इति । एवञ्च ज्ञापकसाजात्यात्स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधावेव स्वरविधावित्यस्य प्रवृत्त्या प्रकृते ह्रस्वनुड्भ्यामित्यस्य स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाभावात्परिभाषाऽप्रवृत्तौ मरुत्वानित्यत्र न स्वर इति ।

न च इषुमानित्यत्र ह्रस्वनुड्भ्यामित्यस्याप्रवृत्तये अन्तोदात्तादित्यनुवृत्तेरावश्यकतया अस्यापि स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वमिति वाच्यम् ।

स्वरत्वव्याप्यधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यञ्जनं न भवतीत्यर्थस्वीकारेण अन्तोदात्तत्वबुद्धेः प्रतिबन्धासंभवेऽपि ह्रस्वान्तत्वबुद्धेः प्रतिबन्धात् ह्रस्वनुड्भ्यामित्यस्याप्रवृत्तेः । अत एव नुड्ग्रहणं चारितार्थम्, अन्यथा ह्रस्वान्तत्वादेव सिद्धे तद् व्यर्थं स्यादित्यलम् ।

गतिकारकोपपदात्कृत् १४३

कृद्ग्रहणं विस्पष्टार्थमिति । ननु क्रियायोगे गतिसंज्ञाविधानात् क्रियानिरूपितस्यैव कारकत्वात् धात्वधिकारे सप्तमीनिर्दिष्टस्यैव उपपदसंज्ञाविधानाच्च क्रियावाचकधातोराक्षेपे तिङन्तयोगे समासाभावेन परिशेषात्कृदन्तयोगे एव समाससत्त्वेन स्वरप्रवृत्त्या कृद्ग्रहणं व्यर्थम्—

न च सहसुपेत्यत्र सहेति योग विभागेन कतिपयतिङन्तोत्तरपदस्य अनुव्यचलदित्यादेः समासस्य सत्त्वेन तत्र स्वराप्रवृत्तये कृद्ग्रहणमिति वाच्यम्,

प्रतिपदोक्तपरिभाषया गतित्वनिबन्धनसमासे एव गतिकारकेत्यस्य प्रवृत्त्या प्रकृते प्राप्त्यभावेन तदर्थं कृद्ग्रहणस्यानावश्यकत्वात् ।

न च निर्गतः कोशाम्ब्या निष्कौशाम्बिरित्यत्र स्वरव्यावृत्तये कृद्ग्रहणमिति वाच्यम्, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा'

इति योगग्रहणलभ्येन नियमेन निरो गतित्वाभावेन गतिसमासाभावात् स्वराप्रवृत्तौ कृद्ग्रहणवैयर्थ्यतादवस्थ्यात्।

न च यत्क्रियायुक्ताः प्रादय इत्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्या क्रिया तं प्रतीति वाक्यशेषे तच्छब्देन धातोरेव ग्रहणात् प्रत्ययस्य तस्यैवोत्तरपदत्वे प्रणीरित्यादावेव स्वरः स्यात् कृद्ग्रहणसत्त्वे तु तत्सामर्थ्येन कृदन्तमात्रग्रहणे प्रणायक इत्यादावपि स्वरसिद्धिरिति वाच्यम्,

यत्क्रियेत्यत्र कर्मधारयस्यैव स्वीकारेण तं प्रतीति वाक्यशेषे निरुक्तरीत्या क्रियाया एव परामर्शेन क्रियारूपमर्थं प्रत्येव गतित्वादिति चेदत आह—कृद्ग्रहणं विस्पष्टार्थमिति।

ननु विस्पष्टार्थं कृद्ग्रहणसत्त्वेऽपि आमन्तेन समासे प्रपचतितरामित्यत्र कृदन्तत्वाभावेनास्याप्रवृत्त्या समासस्वरं बाधित्वाऽव्ययस्वरः स्यादिति चेन्न—

प्रशब्दस्य तरबन्तेन समासे तत आमि सति शिष्टत्वादाम्स्वरस्य सत्त्वेन अव्ययस्वराभावेनादोषात्।

ननु प्रपचतितरशब्दस्य घान्तत्वाभावात् तत आमभावे एकदेशादाम्नि तदन्तस्य पचतितरामित्यस्यैव प्रातिपदिकत्वे तत एव सुपि तदन्तस्यैकपदत्वाभावात्प्रशब्दस्य स्वरः पृथक् श्रूयेतेति चेन्न—शिवभागवत इत्यादावर्थवत्सूत्रेणैव प्रविशिष्टस्य प्रातिपदिकत्वेनादोषात्।

अन्ये तु प्रपचतितरामित्यत्र सति शिष्टस्वरान्तरस्य सत्त्वेन अव्ययपूर्वपदप्रकृतिस्वरप्रयुक्तदोषाभावेऽपि प्रपचतिदेश्येत्यत्र सतिशिष्टस्वरान्तरस्याप्रवृत्त्या अव्ययस्वरं बाधित्वा गतिकारकेति स्वरो माभूदित्यर्थं कृद्ग्रहणमित्याहुः।

वस्तुतस्तु कृद्ग्रहणप्रत्याख्यानपरभाष्येण प्रपचतितराम् प्रपचतिदेश्येत्यत्र च गतिस्वर इष्यत एव इमामेवारुचिमनुसन्धाय 'एके' इति 'अन्ये' इति च मूले उक्तमिति बोध्यम्।

शेखरकारास्तु कृद्ग्रहणाभावे प्रभवनमित्यादौ क्रियायां विशेष्यत्वात्तत्रैव स्यात् न तु प्रणीरित्यादौ इति कृद्ग्रहणं कर्तव्यम् तदुक्तं भाष्ये 'अविकार्यं तु कृद्ग्रहणं कर्तव्यम्' इति। अत एवात्र सूत्रे कृद्ग्रहणं न कर्तव्यमिति नोक्तं भाष्य इत्याहुः।

## कारकाद्दत्तश्रुतयोरेवाशिषि १५५

ननु, संज्ञायामनाचितादीनामित्यनेन कारकात्परयोर्दत्तश्रुतयोरन्तोदात्तत्वे सिद्धे कारकादिति सूत्रं व्यर्थं तन्नियमार्थं 'कारकात्परस्यान्त उदात्त आशिषि संज्ञायां चेद्दत्तश्रुतयोरेव' इति । एवं च देवा एनं देयासुः, देवदत्तः प्रार्थितैर्देवैर्दत्त इति विग्रहः विष्णुरेनम् श्रूयात् इति विष्णुश्रुतः आशिषि लिङ्लोटाविति विग्रहे लिङ् उदाहरणे च क्तिच्क्तौ च संज्ञायाम् इति आशिषि क्तः । एवं च सूत्रे एवकारग्रहणं किमर्थमिति चेत्-तदभावे, आशिषि संज्ञायां दत्तश्रुतयोरन्त उदात्तश्चेत्तर्हि कारकादेवेति विपरीतनियमस्यापत्तौ संश्रुत इत्यादौ अन्तोदात्तत्तानापत्तेः । तदुक्तं मूले-'कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूत्' इति ।

अयं भावः-'यत्र एवकारस्ततोऽन्यत्र नियम' इति सिद्धान्तः दत्तश्रुतयोरेवेति नियमे कारकस्यैवावधारणं भवति । अर्थात् कारकात्परस्यान्यस्य आशिषि संज्ञायां च अन्तोदात्तत्वं न भवति दत्तश्रुतयोस्तु कारकात्परयोरपि भवति गत्युपपदाभ्यां परयोरपि भवति । कारकादेवेति नियमे तु कारकात्परयोरेव संज्ञायामाशिषि दत्तश्रुतयोः स्यान्न गत्युपपदाभ्यां परयोः, कारकात्परस्य तु अन्यस्यापि अन्तोदात्तत्वं स्यात् एवं च संश्रुतो विश्रुत इत्यत्र न स्यादिष्यते चान्तोदात्तत्वमिति ।

नन्वस्मिन्सूत्रे कारकग्रहणं किमर्थं, गतिकारकोपपदादित्यतः कारकग्रहणानुवृत्त्यैव सिद्धेरिति चेन्न-तथा सति एकयोगनिर्दिष्टानामिति न्यायेन गतिकारकोपपदानां त्रयाणामप्यनुवृत्त्यापत्तौ त्रयाणामपि नियमापत्त्या रामायणपाठस्य भावित्वे दृष्टव्यवहारे 'संभूयादिति संभूतो रामायण' इत्यत्र नियमेन अन्तोदात्तत्वव्यावृत्त्यापत्तेः ।

दत्तश्रुतयोः किमिति । एतदभावे 'तृतीया कर्मणि' एतस्यापि नियमः स्यादिति देवपालित इत्यत्र तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरो न स्यात् अस्मान्नियमादत्र संज्ञायामनेति न भवतीति भावः ।

आशिषि किमिति । अनाशिषि नियमो माभूत् देवैः खाता देवखाता श्वभ्रविशेषस्य संज्ञेयम् । आशिष्येवेत्येवमत्रेष्टो नियम इति । आशिष्येवेत्येवमपीत्यर्थः । तेनानाहतो नदति देवदत्त इत्यत्र न भवति । आशिषोऽप्रतीते ।

उभयविधनियमे प्रमाणं तु 'कारदत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः, अनाहतो नदति देवदत्तः सिद्धं तूभयनियमात् उभयतो नियमः करिष्यते' इति भाष्यमेव अनाहतो नदति देवदत्त इत्यत्र धनञ्जयसम्बन्धिनः शङ्खविशेषस्य देवदत्त इति संज्ञा शङ्खविशेषस्य यत्र संज्ञा तत्र देवा एनं देयासुरित्यर्थो न प्रतीयते इति तत्तात्पर्यम् उदाहरणे च देवदत्त इति न शङ्खस्य संज्ञा अपि तु कस्यचित् पुंस इति भवति आशिषः प्रतीतिरिति तत्त्वम् ।

## तिङि चोदात्तवति १४५

नन्वत्र तिङ्ग्रहणाभावेऽपि गत्यादिक्षिप्तक्रियावाचकस्योदात्तवतीति विशेषणात् आमन्द्रैरित्यत्र आङो निघातनिवृत्तिसिद्धौ तिङ्ग्रहणं व्यर्थम् । न च कृदन्तेऽतिव्याप्तिः कृत्स्वरे सति गतेर्निघातस्येष्टत्वादिति चेन्न तदभावे धातुरेव क्रियावाचकत्वाद्गतिसंज्ञानिमित्तमिति यत्र धातोरेवोदात्तत्वं यत्पचतीत्यादौ तत्रैव निघातः स्यात् तत्र हि यच्छब्दयोगान्निपातैर्यद्यदिति निषेधात्तिङतिङ इत्यस्याप्रवृत्तिः तत्सत्त्वे तु यं धातुं प्रति गतित्वं तद्वदिते तिङन्ते इत्यर्थात् तिङन्तस्य निघातनिमित्तत्वात्तिङन्तस्योदात्तत्वमपेक्ष्यते इति यत्प्रकरोतीत्यादौ धातोः शेषनिघातेनानुदात्तत्वेऽपि तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद्गतेर्निघातः सिद्ध इत्याशयात् ।

यः पाणिनीयशतपत्रसहस्ररश्मिरस्मत्पिता सकलतन्त्रविदां वरिष्ठः ।
श्रीरामभद्रपदपङ्कजलुब्धचेता रामेश्वरः स सुकृती भवतात्सुतुष्टः ॥ १ ॥
रामेश्वरतनूजन्मसूर्यनारायणोदिते । वादरत्नाकरे पूर्तिं प्रवाहः प्रथमोऽभजत् ॥

श्रीमन्माधवदेशिकादपि परां विद्यां तु वैयासिकीं
मीमांसाम तमांसलां गुरुवराद्रामानुजार्यादपि ॥
शाब्दं चन्द्रधराज्जगत्सुविदिताच्छ्रीदत्तविद्वद्वरात्
तर्कं सम्यगधीत्यसोऽस्मि सुकृती श्रीसूर्यनारायणः ॥ ३ ॥

इति सरयूपारीण श्रीसूर्यनारायण शुक्ल रचिते वादरत्नापरनामधेये वादरत्नाकरे प्रथमः प्रवाहः समाप्तः ।

---

समाप्तश्चायं प्रथमो भागः ।

---

# रामवनगमनम्

## सटिप्पण-सान्वय-सुधा-इन्दुमती-चतुष्टयटीकाविभूषितम्

याद रखिये सन् ४८ की नवीन नियमावलीके अनुसार निर्णयसागर प्रेससे प्रकाशित वाल्मीकिरामायणके मूलाधार पर यही एक विशुद्ध प्रामाणिक संस्करण प्रकाशित हुआ है। इसकी प्रथम परीक्षोपयोगी 'सुधा' टीकामें अन्वय, पर्याय, समास, कोश तथा ग्रन्थोपक्रमसे टिप्पणीमें पौराणिक कथायें भी दी गयीं हैं जो कि परीक्षामें प्रश्न आने योग्य हैं और अन्य किसी भी संस्करणमें इसका उल्लेख नहीं किया गया है। एवं सुधा टीकाके साथ साथ 'इन्दुमती' नामकी विस्तृत भाषा टीकामें श्लोकोंके गूढार्थ अभिप्रायोंको इस तरह सरल शब्दोंमें अभिव्यक्त कर दिया गया है कि विद्यार्थियोंको श्लोकार्थ समझनेमें प्रायः शिक्षकों की आवश्यकता नहीं ही होगी। ग्रन्थके शुरूमें प्रत्येक सर्गका परीक्षोपयोगी संक्षिप्त कथासार भी दे दिया गया है। परिष्कृत अभिनव द्वितीय संस्करण १।।।)

# श्रीकोषः

याद रखिये इसी "श्रीकोश" के द्वारा आपको एक शब्दके कई अर्थ एवं पर्याय पर्याप्तरूपेण मिल सकेंगे। इसमें लिङ्ग क्रिया क्रियाविशेषण, संज्ञा, भाव वाचकसंज्ञा, आदि का निर्देश समुचित रूपसे दिया गया है। एक्सरे, कुर्सी, टेबुल आलमारी, बेंच, म्युनिसिपलिटी, कचहरी, जज, कोतवाल, थानेदार, आदि वर्तमान चलते-फिरते शब्दों की ओर ( जिनकी संस्कृत बनाने में आप लोगोंको कठिनाई पड़ती थी ) तृ० संस्करण में और भी विशेष ध्यान दिया गया है १।)

# रूपचन्द्रिका

इस संस्करण में 'लघुकौमुदी' में आये हुए सभी शब्दों तथा धातुओं के रूप देकर तत्समानाकार अन्य प्रसिद्ध शब्दों और धातुओं के भी बहुत से रूप दिये गये हैं एवं सभी धातुओंके सेट, अनिट, सकर्मक अकर्मक आदि का भी निर्देश कर दिया गया है। प्रथमा परीक्षार्थियों के लिये बड़ी उपादेय पुस्तक है ॥)

# तर्कसंग्रहः

## लक्षण-टिप्पणी-सहित 'इन्दुमती' भाषा टीका

प्रथमपरीक्षोपयोगी लक्षण टिप्पणी के साथ इन्दुमती नामक विस्तृत भाषा टीका सहित इस अभिनव संस्करण को देखकर आप अत्यधिक प्रसन्न होंगे प्रथमपरीक्षामें आनेयोग्य सभी प्रश्नोंके उत्तर आपको इस संस्करणमें प्राप्त होंगे ।=)

---

प्राप्तिस्थानम्—चौखम्बा-संस्कृत-पुस्तकालय, बनारस सिटी।

# साहित्यदर्पणः

## सटिप्पण—'लक्ष्मी' नामक टीका विभूषितः ।

आजतक की प्रकाशित सभी टीकायें इसमें गतार्थ हो चुकी हैं। काशी के सुप्रसिद्ध साहित्यके प्रकाण्ड विद्वान पण्डितराज श्रीमान् ताराचरण भट्टाचार्य जी के तत्वावधानमें इस सुविस्तृत टीकाकी रचना की गयी है। भट्टाचार्यजी की हस्तलिखित भूमिका में प्रचुर रूपसे इस टीका का विवेचन किया गया है जो कि पुस्तकमें प्रकाशित आपको प्राप्त होगा। आजतक इतनी सरल सुविस्तृत टीका प्रकाशित नहीं हुई थी। हरिदासी टीका भी इस के सामने मात हो गयी है। काशी के सभी बड़े २ विद्वान् मुक्त कण्ठ से इसकी प्रशंसा कर रहे हैं। ३)

# दशकुमारचरितम्

## बालविबोधिनी-बालक्रीडा संस्कृत हिन्दी टीका द्वयोपेतम् ।

साहित्याचार्य पं० ताराचरण भट्टाचार्य कृत बालविबोधिनी संस्कृत टीका बालक्रीडा हिन्दी टीका से युक्त परीक्षोपयोगी यह संस्करण सब संस्करणों से श्रेष्ठ है। विशेष क्या आप स्वयं परीक्षा कर निर्णय कर सकते हैं।

पूर्वपीठिका १॥) पूर्वपीठिका तथा प्रथम, और अष्टम उच्छ्वास २) पूर्वपीठिका तथा उत्तरपीठिका को द्वितीय उच्छ्वास, ( अपहारवर्मचरित पर्यन्त ) अभिनव भूमिका संयोजित संस्करण २॥) संपूर्ण ग्रन्थ ५॥)

# नागानन्दं नाटकम्

## भावार्थदीपिका-संस्कृत-हिन्दी-टीकाद्वयोपेतम् ।

इस अभिनव परिवर्धित द्वितीय संस्करण में सम्पूर्ण ग्रन्थको सर्वाङ्ग पूर्ण परीक्षोपयोगी बना दिया गया है। अतिशय सरल व विस्तृत भाषा टीका को यथास्थानमें संनिवेशित करके प्रत्येक सर्ग का परीक्षोपयोगी संक्षिप्त हिन्दी कथासार भी दे दिया गया है। द्वितीय संस्करण ३॥)

---

